तार्किकतृणवातालिः सांख्यकुञ्जरकेसरी ।
वेदान्तशेषसिद्धान्तो *महान्तोऽयमुपास्यताम् ॥
बाह्यविज्ञानसोपानमन्तर्विवेकशेखरम् ।
विदित्वैनं महामन्त्रं मनस्तत्त्वे निवेश्यताम् ॥
क्रीडन्तो भवकान्तारे रे रे जीवविहंगमाः ।
सिद्धान्ततरुमारुह्य पीयतां फलपञ्चकम् ॥
गौरनीलतनुः पायादपायात्सुतवत्सला ।
अमेयाऽपि कुले कापि या विरेजे यदृच्छया ॥

इति चतुर्थे ज्ञानपाठे चतुर्थः प्रपाठः ॥ ४ ॥

इति वैश्वदेवे भाष्ये निरञ्जनाख्ये चतुर्थो ज्ञानपाठः ।

समाप्तमिदं निरञ्जनभाष्यसमेतं सिद्धान्तदर्शनम् ।

ॐ तत्सद्ब्रह्मार्पणमस्तु ।

आबाल्याद्ब्रह्मचारी विबुधपरिचितः सच्चिदानन्दनाम्ना,
जातो रत्नाकरस्य प्रथिततमतटे यो महाराष्ट्रदेशे ।
दिव्ये दैवात्कुतश्चित्प्रतिवसति नवद्वीपधाम्नीव दीप-
स्तेनाऽऽनन्दाश्रमश्रीहरिनिकटमसौ भाति सिद्धान्तराजः ॥ १ ॥

पुण्यनगरभानुर्गुणसिन्धुर्जयताच्छ्रीहरिरार्थितबन्धुः ।
यत्करुणाकणया विरराज श्रुतिसिद्धान्तो दर्शनराजः ॥ २ ॥
शाके सिन्धुघनेभेन्दुमाने पूर्णेन्दुसंनिभम् ।
रेजे यत्राक्षरैर्दिव्यैर्दर्शनं चित्रदर्शनम् ॥ ३ ॥

---

* वेदान्तशेषसिद्धान्तो वेदान्तानामुपनिषदां शेषश्चरमः सिद्धान्तो मीमांसा यत्र सः । वेदान्त शेषयतीति वेदान्तशेषः स चासौ सिद्धान्तश्चेतीति वा । महान्त इति संबोधनादेतदाग्रे कारिणः शास्त्रोक्तगुणवन्त एव सूचिता इति वार्तिकम् ।